दधिसमौ नद्योदधिसमयो. रसौ जले मेलनेन सागरत्वमैकरस्यं यद्वदवाप्ताविरयर्थः । यथायं दृष्टान्तस्तद्वज्जीवश्च आलीयते अस्मिन्नुपाधिमात्रमित्यास्य ब्रह्म तयोः परिगतौ उपाधिविलयादैक्ये स हि सामरस्येन एकभूता अखण्डभावेन स्थिताः । अवच्छेदभेदवद्बिम्बप्रतिबिम्बभेदस्याप्युपाधिकृतत्वात्तत्परिलयेन गत स्वस्थान एव विस्मृतकण्ठचामीकरवदधिगत सत्सर्वभेदातीत सच्चिदानन्दैकरूप स्वात्मान प्राप्तस्य निस्त्रैगुण्ये इत्यादि प्राग्वत् । नद्योऽम्बुधिसमरसा इति पाठस्तु स्पष्टः ॥ ५ ॥

किञ्च त्वपदार्थस्य तत्पदलक्ष्यसन्मात्रतावधारणात्तत्पदार्थस्य च त्वपदलक्ष्यस्वप्रकाशप्रत्यङ्मात्रत्वावधारणादुभयैक्येन पूर्णानन्दमात्रपरिशेषात्र पुनर्विधिनिषेधवश्यताप्राप्तिरित्याह—दृष्ट्वेति ।

> दृष्ट्वा वेद्यं परमयपदं स्वात्मबोधस्वरूपं
> बुद्ध्वाऽऽत्मानं सकलवपुषामेकमन्तर्बहिःस्थम् ।
> भूत्वा नित्यं सदुदिततया स्वप्रकाशस्वरूपं
> निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ६ ॥

वेद्य सन्यासेन सर्वस्वमपि विहाय महाप्रयत्नेनावश्यवेदनीयं परब्रह्मस्वात्मबोधमात्रस्वरूपम् । बुद्ध्वाऽऽत्मान प्रत्यञ्चं सकलवपुषामन्तर्बहिःस्थमेकमद्वितीयसन्मात्र बुद्ध्वा सर्वैकरस्येन सदुदिततया स्वप्रकाशपूर्णानन्दस्वरूप भूत्वा निस्त्रैगुण्य इत्यादि प्राग्वत् ॥ ६ ॥

> कार्याकार्ये किमपि सततं नैव कर्तृत्वमस्ति
> जीवन्मुक्तस्थितिमवगतो दग्धवस्त्रावभासः ।
> एवं देहे प्रविलयगते तिष्ठमानो विमुक्तो
> निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७ ॥

किञ्च सति कार्ये तद्रागात्तदर्थप्रवृत्तौ कर्ता स्यात् । स्वभावश्च विधिशास्त्रेऽधिक्रियेत । सत्यकार्ये पापे तत्फले द्वेषात्ततो निवर्तमानस्तत्कर्ता सन् निषेधशास्त्राधिकारी स्यात् । ननु कार्याकार्ये किमपि तुच्छे एव च सति सतत सदैव प्रागिदानीमग्रे च नैव कर्तृत्वमस्ति । यदि नास्ति तर्हि जीवनार्थे भिक्षाटनादौ तत्त्वोपदेशसमाध्यादौ च कथ व्यवहरतीति चेत्तत्राह—जीवन्मुक्तेति । अतोऽह दग्धवस्त्र संस्काराद्वस्त्राकारमिद पूर्वसंस्काराद्व्यवहरन्निवावभासे इति दग्धवस्त्रावभास. । वस्तुतस्तु जीवन्नेव मुक्तस्थिति. । एवमुक्तरीत्या ज्ञानाग्निदग्धत्वाद्देहे भस्मीभूतपटवत्प्रविलयगते तिष्ठमान. प्रकाशमानोऽप्यहं "प्रकाशनस्थेयाख्ययोश्च" इति आत्मनेपद विमुक्त एव अतो निस्त्रैगुण्ये इत्यादि प्राग्वत् ॥७॥

किञ्च यावन्न विमृश्यते तावदेव द्वैत सदिव भासते, विमर्शे तु नाभ्यन्तरस्य बाह्यस्य द्वैतस्य स्वरूप कदाचित्केनचिदपि निरूपयितु शक्यमिति दर्शयति—कस्मादिति ।

> कस्मात्कोऽहं किमपि च भवान्कोऽयमन्यः प्रपञ्चः
> स्वं स्वं वेद्यं गगनसदृशं पूर्णतत्त्वप्रकाशम् ।
> आनन्दाख्ये समरसघने बाह्यमन्तर्विहीने
> निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ८ ॥

अहमिति परिच्छिन्नमहङ्कारात्मक यदात्मस्वरूप भाति तत् कस्मात्कश्च कारणत स्वरूपतश्च दुर्निरूपमित्यर्थं । तथाहि—तच्चागन्तुक स्यान्नित्य वा आद्ये कस्मादुपादानात्तदागत न तावज्जडत चेतनात्मरूपत्वानुभव विरोधात्, जडस्य चेतनोपादानत्वायोगात् । नापि चित, चितेरपरिणामिस्वभावत्वात्परिणामायोगात् । यदि विवर्तता ब्रूपे तर्हि तस्य मृषात्वमेव स्यान्नित्यत्वे कामादिपरिणामविरोध । तथा कोऽह कोऽयमहकारात्मेत्यर्थं । न तावज्जड, आत्मत्वानुभवविरोधात् । नापि चित् परिच्छेदविपयत्वानुभवविरोधात् जडदेहापक्षपातविरोधाच्च । तस्मादहकारात्मा दुर्वाच्य एवेत्यर्थं । किञ्च भवान् त्वमपि किमनात्मवस्त्वात्मवस्तु वा आद्ये चेतनत्वविरोधो द्वितीये ममपरत्वानुभवविरोध । अत्रावयो प्रतीयमान प्रपञ्च क किं स्वत सिद्ध उत परत आद्ये जाड्यानुभवविरोध, आत्मवच्चिद्रूपत्वापत्तौ भेदकरूपान्तरापरिशेपादखण्डपूर्णचिन्मात्रैकरस्यप्रसङ्गश्च । द्वितीयेऽपि स पर केन सिद्ध किं परत स्वतो वा । आद्येऽनवस्थापत्ति, द्वितीये स्वप्रकाशस्य तस्य परसाधकता तत्सबन्धाद्वाच्या । स सवन्ध किं तादात्म्यमुत सयोग । नाद्य चिज्जडयोरैक्यघटिततादात्म्यायोगात् । नापि द्वितीय, अक्रियाया निरवयवायाश्च चिते सयोगायोगात् । समवायाभ्युपगमे चानवस्थाद्यापत्तेरयुतसिद्धयदर्शनाच्च । एवञ्च स्वम् आत्मस्वरूप स्व स्वात्मैकनिष्ठ न स्वासबद्ध पर साधयितु शक्नोतीति ।

वेद्य जगद्रूप गगनसदृश शून्यमेव । यदि तु गगनमपि न शून्यमप्रामाण्यप्रसङ्गात्तर्हि पूर्णं यत्तत्त्वमबाधितसन्मात्र स एव स्वात्मप्रकाशो यस्य तथाविधमपरिच्छिन्नस्वप्रकाशचिन्मात्रमित्यर्थं । तत्कुत यत इद वेद्यजातमत स्वातिरिक्तवस्तु विहीने अत एव समरसघने सैन्धवघनवज्ज्ञानैकरसघने भूमानन्दारये, प्रवाह्य बहिरनवस्थितिमतस्ताद्दश निस्त्रैगुण्ये नित्यमुक्तात्मैकस्वभावे ,पथि विचरतो ममान्यस्य वा सर्वथा विधिनिपेधघटितकर्माधिकारो न केनापि सपादयितु शक्य इति पूर्ववत् ॥ ८ ॥

इदानी सर्वोपकाराय स्वोपदिष्टाष्टकाभ्यासस्यापि महाफलताप्रदर्शनमुखेन तदर्थानुसन्धानस्य मोक्षफलता दर्शयति—सत्यमिति ।

**सत्यं सत्यं परमममृतं सर्वकल्याणरूप**
**मायारण्ये दहति मलिने शान्तिनिर्वाणदीपम् ।**
**तेजोरूपं निगमसदन व्यासपुत्राष्टकं यः**
**प्रातःकाले पठति मनसा याति निर्वाणमार्गं ॥ ९ ॥**

इति शुकाष्टकस्तोत्र सम्पूर्णम् ॥ ॐ ॥

इद व्यासपुत्रस्य वाक्यामृतरूपमष्टकमेव परमामृतसाधनत्वात्परममृत सर्वेषां प्राणिना कल्याणरूपमाध्यात्मिकादितापभयदहने सदा दह्यमानत्वेऽपि मोहध्वान्तपिहितत्वान्मलिने जगन्मायालक्षणेऽरण्ये मायाध्वान्तस्य तापत्रयानलानाञ्च शान्त्या प्रशमनेन निर्वाणस्य मोक्षसुखस्य प्रकाशकत्वाद्दीपभूत निगमा वेदान्ता सदन प्रकाशगृह यस्य तथाविध यत्तेज प्रभास्थानीयोऽर्थप्रकाशस्त रूपयतीति रूपम् । ईदृश व्यासपुत्राष्टकमिद य पुरुषोऽर्थानुसन्धानपरेण मनसा प्रात काले पठति स तस्यानुग्रहात्क्रमाज्ज्ञान प्राप्य निस्त्रैगुण्ये प्रागुक्तनिर्वाणमार्गेऽवश्य याति मुच्यत इत्यर्थ ॥ ९ ॥

श्रीमच्छुकाष्टकस्येय व्याख्या बुद्धिसरोरुहम् ।
भानुप्रभेव भुवन प्रबोधयति सन्मते ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यश्रीमद्रामचन्द्रसरस्वतीपूज्यपादशिष्यगङ्गाधरेन्द्रसरस्वत्याख्यभिक्षुणा कृत शुकाष्टक सम्पूर्णम् ॥

# अथ बृहदारण्यकोपनिषत्कण्डिकाद्यपदानां वर्णानुक्रमः ।

समाप्तोऽयं बृहदारण्यकोपनिषत्कण्डिकाद्य-
पदानां वर्णानुक्रमः ।

—